# श्री लक्ष्मि अष्टोत्तर शतनाम स्तोत्रम्

**देव्युवाच**
देवदेव। महादेव। त्रिकालग्न्य। महेश्वर।
करुणाकर देवेश। भक्तानुग्रहकारक। ॥
अष्टोत्तर शतं लक्ष्म्याः श्रोतुमिच्छामि तत्त्वतः ॥

**ईश्वर उवाच**
देवि! साधु महाभागे महाभाग्य प्रदायकम् ।
सर्वैश्वर्यकरं पुण्यं सर्वपाप प्रणाशनम् ॥
सर्वदारिद्य शमनं श्रवणाद्भुक्ति मुक्तिदम् ।
राजवश्यकरं दिव्यं गुह्याद्-गुह्यतरं परम् ॥
दुर्लभं सर्वदेवानां चतुष्षष्टि कळास्पदम् ।
पद्मादीनां वरांतानां निधीनां नित्यदायकम् ॥
समस्त देव संसेव्यम् अणिमाद्यष्ट सिद्धिदम् ।
किमत्र बहुनोक्तेन देवी प्रत्यक्षदायकम् ॥
तव प्रीत्याद्य वक्ष्यामि समाहितमनाश्शृणु ।
अष्टोत्तर शतस्यास्य महालक्ष्मीस्तु देवता ॥
क्लीं बीज पदमित्युक्तं शक्तिस्तु भुवनेश्वरी ।
अंगन्यासः करन्यासः स इत्यादि प्रकीर्तितः ॥

**ध्यानम्**
वंदे पद्मकरां प्रसन्नवदनां सौभाग्यदां भाग्यदां
हस्ताभ्यामभयप्रदां मणिगणैः नानाविधैः भूषिताम् ।
भक्ताभीष्ट फलप्रदां हरिहर ब्रह्मादिभिस्सेवितां
पार्श्वे पंकज शंखपद्म निधिभिः युक्तां सदा शक्तिभिः ॥
सरसिज नयने सरोजहस्ते धवळ तरांशुक गंधमाल्य शोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवन भूतिकरि प्रसीदमह्यम् ॥

ओं
प्रकृतिं, विकृतिं, विद्यां, सर्वभूत हितप्रदाम् ।
श्रद्धां, विभूतिं, सुरभिं, नमामि परमात्मिकाम् ॥ १ ॥

वाचं, पद्मालयां, पद्मां, शुचिं, स्वाहां, स्वधां, सुधाम् ।
धन्यां, हिरण्ययीं, लक्ष्मीं, नित्यपुष्टां, विभावरीम् ॥ २ ॥

अदितिं च, दितिं, दीप्तां, वसुधां, वसुधारिणीम् ।
नमामि कमलां, कांतां, क्षमां, क्षीरोद संभवाम् ॥ ३ ॥

अनुग्रहपरां, बुद्धिं, अनघां, हरिवल्लभाम् ।
अशोका, ममृतां दीप्तां, लोकशोक विनाशिनीम् ॥ ४ ॥

नमामि धर्मनिलयां, करुणां, लोकमातरम् ।
पद्मप्रियां, पद्महस्तां, पद्माक्षीं, पद्मसुंदरीम् ॥ ५ ॥

पद्मोद्भवां, पद्ममुखीं, पद्मनाभप्रियां, रमाम् ।
पद्ममालाधरां, देवीं, पद्मिनीं, पद्मगंधिनीम् ॥ ६ ॥

पुण्यगंधां, सुप्रसन्नां, प्रसादाभिमुखीं, प्रभाम् ।
नमामि चंद्रवदनां, चंद्रां, चंद्रसहोदरीम् ॥ ७ ॥

चतुर्भुजां, चंद्ररूपां, इंदिरा, मिंदुशीतलाम् ।
आह्लाद जननीं, पुष्टिं, शिवां, शिवकरीं, सतीम् ॥ ८ ॥

विमलां, विश्वजननीं, तुष्टिं, दारिद्य नाशिनीम् ।
प्रीति पुष्करिणीं, शांतां, शुक्लमाल्यांबरां, श्रियम् ॥ ९ ॥

भास्करीं, बिल्वनिलयां, वरारोहां, यशस्विनीम् ।
वसुंधरा, मुदारांगां, हरिणीं, हेममालिनीम् ॥ १० ॥

धनधान्यकरीं, सिद्धिं, स्त्रैणसौम्यां, शुभप्रदाम् ।
नृपवेश्म गतानंदां, वरलक्ष्मीं, वसुप्रदाम् ॥ ११ ॥

शुभां, हिरण्यप्राकारां, समुद्रतनयां, जयाम् ।
नमामि मंगळां देवीं, विष्णु वक्षःस्थल स्थिताम् ॥ १२ ॥

विष्णुपत्नीं, प्रसन्नाक्षीं, नारायण समाश्रिताम् ।
दारिद्य ध्वंसिनीं, देवीं, सर्वोपद्रव वारिणीम् ॥ १३ ॥

नवदुर्गां, महाकाळीं, ब्रह्म विष्णु शिवात्मिकाम् ।
त्रिकालग्न्यान संपन्नां, नमामि भुवनेश्वरीम् ॥ १४ ॥

लक्ष्मीं क्षीरसमुद्रराज तनयां श्रीरंगधामेश्वरीम् ।
दासीभूत समस्तदेव वनितां लोकैक दीपांकुराम् ॥
श्रीमन्मंद कटाक्ष लब्ध विभवद्–ब्रह्मेंद्र गंगाधराम् ।
त्वां त्रैलोक्य कुटुंबिनीं सरसिजां वंदे मुकुंदप्रियाम् ॥ १५ ॥

मातर्नमामि! कमले! कमलायताक्षि!
श्री विष्णु हृत्–कमलवासिनि! विश्वमातः!
क्षीरोदजे कमल कोमल गर्भगौरि!
लक्ष्मी! प्रसीद सततं समतां शरण्ये ॥ १६ ॥

त्रिकालं यो जपेत् विद्वान् षण्मासं विजितेंद्रियः ।
दारिद्य ध्वंसनं कृत्वा सर्वमाप्नोत्–ययत्नतः ।
देवीनाम सहस्रेषु पुण्यमष्टोत्तरं शतम् ।
येन श्रिय मवाप्नोति कोटिजन्म दरिद्रतः ॥ १७ ॥

भृगुवारे शतं धीमान् पठेत् वत्सरमात्रकम् ।
अष्टैश्वर्य मवाप्नोति कुबेर इव भूतले ॥
दारिद्य मोचनं नाम स्तोत्रमंबापरं शतम् ।
येन श्रिय मवाप्नोति कोटिजन्म दरिद्रतः ॥ १८ ॥

भुक्त्वातु विपुलान् भोगान् अंते सायुज्यमाप्नुयात् ।
प्रातःकाले पठेन्नित्यं सर्व दुःखोप शांतये ।
पठंतु चिंतयेद्देवीं सर्वाभरण भूषिताम् ॥ १९ ॥

इति श्री लक्ष्मी अष्टोत्तर शतनाम स्तोत्रं संपूर्णम्